- Title – अज्ञात
- Accession No – Title –
- Accession No –
- Folio No/ Pages – 8/16
- Lines-
- Size
- Substance Paper –
- Script Devanagari
- Language –
- Period –
- Beginning – कुप्तातादर्थ्यचतुर्थ्याहेति शेषः
- End – रम्यं बालप्रबोधार्थमक्षरश्लोकथा यथा
- Colophon-
- Illustrations -
- Source -
- Subject -
- Revisor -
- Author - अज्ञात
- Remarks- अपूर्ण

सोनम

१

लुप्तनादर्थ्यचतुर्थीमाहेति [illegible] शेष: उकारस्तदेवाग्निरित्यादिष्वानग्रमात्रेण अवधारणार्थे उ
कार: अनयोर्मकाराकारवाच्ययोर्जीवात्मपरमात्मनो: संबंधं शेषशेषिभावरूपसंबंधं अनन्या
अन्येषां
र्हं भगवद्भागवतव्यतिरिक्तानां अर्हं योग्यो यथा न भवति तथा नियमयति अवधारयति त्रयीसार:
त्रय्या ऋग्यजुस्सामरूपवेदत्रयस्य सार: स्थिरांश: सारभूतार्थप्रतिपादक इत्यर्थ: त्रीण्यक्षराण्या
त्मा रूपं यस्य स [त्र्या] आत्मा अकारोकारमकाररूप इत्यर्थ: प्रणव: ॐकार: इमं पूर्वोक्तमर्थं चेतनस्य
भगवदनन्यार्हशेषत्वरूपमर्थं समादिशत्सम्यक्प्रत्यपादयदित्यर्थ: २ ॥

१ श्रीमते रामानुजाय नमः श्रीपाराशरभट्टार्यः श्रीरंगेशपुरोहितः श्रीवत्सांकसुतः श्रीमान्श्रेयसे मेऽस्तु भूयसे १ उदय
स्थरक्षाचप्रलयस्य उदयरक्षाप्रलयाः जगतां उदयरक्षाप्रलयास्तान्करोतीति जगदुदयरक्षाप्रलयकृत् जगदु
त्पत्तिस्थितिसंहारकर्तेत्यर्थः अकारस्य अवरक्षणइति व्याप्नोतीति विष्णुः विष्लृ व्याप्ताविति धातुः व्यापनशीलः
श्रियःपतिः अकारार्थः अकारस्य अवरक्षणगतिहिंसादिष्विति धातोरुत्पन्नस्य स्रष्टृत्वरक्षकत्वसंहारकत्वा
दिवाचकस्य अर्थो वाच्यः जीवः नित्यबद्धमुक्तरूपेण त्रिविधश्चेतनः मकारार्थः मकारस्य मन ज्ञाने मतौ अणु

अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत् मकारार्थो जीवस्तदुपकरणं वैष्णवमिदं उकारोनन्यार्हनि
यमयति संबंधमनयोस्त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत् १

परिमाणे मदी हर्षे इतिधातुभ्य उत्पन्न
स्य ज्ञानगुणकत्वअणुपरिमाणत्व आनंदगुणकत्वादिवाचकस्यार्थो वाच्यः वैष्णवं विष्णोर्जातं इदं मकारवाच्यं
चेतनवस्तुतदुपकरणं तस्य अकारवाच्यस्य विष्णोरुपकरणं शेषभूतं यद्वा तत् उपकरणमिति छेदः तन्म
कारवाच्यमिदं चेतनजातं वैष्णवं विष्णुसंबंधि उपकरणं विष्णोः शेषभूतमित्यर्थः इत्यकारोपरिस्थित

स्यागतिः शोचिता भवति का काहिन्त्यापेन पश्चादंते ईप्सिते न अन्विते न नारायणपदान्विते न नमसा सबंद्धे न नमसा
गम्यं प्राप्यं इति हि तेन कथमित्युक्ते नारायणपदान्वयेन मई इति सबंद्धे न नमसा । नारायणपदान्वयेन नारायणपदस्य सर्वशेषित्वेन स
मस्तकल्याणगुणाकरस्य श्रीपतये विष्णवे एव सकलविधिकैंकर्यकारित्वम् मदर्थेन कर्त्तव्यम् इत्यर्थबोध
नेन कैंकर्यस्वार्थत्वनिवृत्त्या गम्यं शोधितं भवति अनेन स्वरूपोपायपुरुषार्थाः शोधिता इति भावः शिखत्वमाह
स्यातंत्र्यमिति स्वतंत्रस्य भावः स्वातंत्र्यं स्वाधीनत्वं तस्य स्वतंत्रत्वेन वेदांतप्रसिद्धस्य हरेः सर्वस्वाधीनतया हरतीति
हरिः तस्य हरेर्विष्णोः हञ् हरणे इति धातुः तस्य हरेर्विष्णोरेव उचितं अन्येषां भागवज्ञानवद्व्यतिरिक्तानां नोचितं अन
र्हं निजं चरणद्वयं शरणं यन्निजं रक्षणमित्यर्थः तस्य सर्वरक्षकत्वेन वेदांतप्रसिद्धस्य हरेः स्वाश्रितजनपापं हरतीति
हरिः तस्य हरेर्विष्णोरेव उचितं अन्योचितं न सम्यगुचितासमुचिता वृत्तिः व्यापारः व्यक्तवत्तु कैंकर्यं चेतनस्य
सर्वशेषित्वेन वेदांतप्रसिद्धस्य हरेः सर्वशेषतया हरतीति हरिः तस्य हरेर्विष्णोरेव उचिता अन्योचिता न इत्यन्वयो वि
विच्य विभज्य कथितं प्रोक्तं स्यात् नत्र यान्विते न सबंद्धेन नमसा प्रतिपादितमित्यर्थः ततस्तस्मात्कारणात् स्वस्या
पि परमात्मनः स्वस्य वनार्हं नोचितं स्यात् तं याद्रिव यथा भयस्याधारत्वं न भवतीत्यर्थः २ ॥ ॥ ॥

मंतारं अनुसंधातारं त्रायंते रक्षंतीति मंत्राः मंत्रेषु ब्रह्म मंत्रब्रह्मं तस्मिन् मंत्रब्रह्मणि मंत्रश्रेष्ठे श्रीमदष्टाक्ष
रे मध्यमे नमध्ये प्रणवनारायणायेत्यंतराले भवं मध्यमं तेन मध्यमेन पुरतः अग्रे ईक्षितेन प्रणवान्वितेन न
मसा सर्वेऽनेनायं सम्यक्तस्य स्वरूपं शेषत्वरूपं स्वरूपं प्रदर्शितं शोधितं कथमिति उक्ते ॐ नम इति सर्वेऽ
नमसः प्रणवान्वयेन आयेव नमः मेनेति वाक्ये मंत्याजीवो विष्णोरेव शेषभूतः न स्वात्मन इत्यर्थं बोध

मंत्रब्रह्मणि मध्यमेन नमसाऽयं सस्वरूपं गतिं गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः
स्वातंत्र्यं निजरक्षणं समुचितां वृत्तिं च नान्योचितां तस्यैवेति हरेर्विविच्य कथितं स्वस्यापि नार्हं ततः २

नेन स्वशेषत्वनिवृत्त्या स्वरूपं शोधितं भवति स्थानतः (च) स्थाने ईक्षितेनान्वितेन अर्सर्वेऽनमोऽन्वितेन नमसा
त्रि
सर्वेऽनमसा गतिरूपायः [illegible] ईक्षितः कथमित्युक्ते नमो नम इति सर्वेऽनमसः अर्सर्वेऽनमोऽन्वयेन नमः स्व
रक्षणोपायः स्वरक्षणप्रवृत्तिर्मे स्वात्मनः न किंतु भगवत एवेत्यर्थबोधनेन स्वरक्षणे स्वान्वयं निव

न
प

२

कैंकर्य्याणि तेषां विधयोनुष्ठानि आविःस्युः अविद्यादिरूपप्रतिबंधकनिवृत्त्या आविर्भावंत्वित्यर्थः ३ प्रपन्नः शरणागतं देहात्मशक्यात्मबुद्धिः देहे शरीरे संकालग्ना आत्मेति बुद्धिर्यस्य स तथोक्तः देहे आत्मभ्रमवान् भवति यदि स्यात्तदा तृतीयं प्रणवे तृतीयपदं मनुज्ञाने मदीहर्षे मसीअणुपरिमाणे इति धातुष्वपउत्पन्नं जडत्वाचेतनत्वस्थूलत्वदुःखरूपत्वादिविशिष्टदेहविलक्षणज्ञानानंदस्वरूपत्वज्ञानानंदगुणकत्वाणुत्वविशिष्टवस्तुप्रतिपाद

देहात्मशक्यात्मबुद्धिर्यदि भवति पदं साधु विद्यात् तृतीयस्यार्थं धोयदि स्यात् प्रथममितरशेषत्वधीर्वैद्वितीयं आत्मैरीणामुख्यस्वेन्नमइति च पदं वांधवाभासलोलः शब्दं नारायणाख्यं विषयचपलधीश्चेन्न तुर्थीकं मकारं साधु सम्यक् विद्या ज्ञानी यात् सदानुसंदधीतेत्यर्थः तथा च मकारार्थानुसंधानेन आत्मस्वरूपस्य देहादिविलक्षणत्वप्रतीत्या देहात्मभ्रमो निवर्त्तत इति भावः स्वातंत्र्यांधः स्वातंत्र्येण स्वाधीनतया अंधः नितरां हि तमगवच्छेषत्वस्वरूपः स्याद्यदि भवति चेत् प्रथमं प्रणवे आद्यं पदं अवगतिरक्षणाहिंसादिष्विति धातोरुत्पन्नं सर्वकारणत्वसर्वरक्षत्वसर्वशेषित्वसकलकल्याणगुणात्मकत्वविशिष्टविष्णुप्रतिपादकं तु मतादर्थे

२

अहंअकारार्थीयेवअकारवाच्यायविष्णवेएवस्वशेषभूतःअयमर्थःनअतएवममापिशेषभूतोनभवामि री
यंतेसीयंतेइतिराःक्षयिष्णवः रीङ्‌ इतिधातुःराःभवंतीतिनराःतेषांसमूहोनाराःस्वरूपतःप्रवाहतश्चनि
त्यानिवस्तूनि ईयतेइत्ययनंप्राप्यं ईयतेनेनेत्ययनंप्रापकं ईयत्यस्मिन्नित्ययनेआधारःनाराणांअयनंप्राप्यं
प्रापकमाधारश्चनारायणःनाराअयनमाधारोयस्येतिनारायणःनारायणपदं नराणांनित्यानांनिवहाःसमूहाः

अकारार्थीयेवस्वमहमयमर्थःननिवहानराणांनित्यानामयनमितिनारायणपदं यमाहास्मिकालंसक
लमपिसर्वत्रसकलास्ववस्थास्वाविष्णुमेमसहजकैंकर्यविधयः ३

अयनमाधारोयस्यनराणांनित्यानांनि
वहानांसमूहानांअयनंप्राप्यंप्रापकमाधारश्च इतियंविष्णुमाह अत्रबहुव्रीहिसमासेयस्यातिशेषपूरणंतत्पु
रुषसमासेनिवहाइत्यत्रनिवहानामितिविभक्तिव्यत्ययःकार्यः अनेनसमासद्वयेनचपरत्वसौलभ्ये फलितः
अस्मैनारायणाय सकलंकालंसर्वेषुकालेषुसर्वत्रसर्वेषुदेशेषुसकलास्ववस्थासु स्थितिगमनशयनादिसक
लदशास्वपिममस्वरूपज्ञानवतोमेसहजकैंकर्यविधयः सहजायंतइतिसहजाःस्वाभाविकाःकिंकरस्यकर्माणि

४

श्च पलश्चासक्तश्चेत् नारायणाख्यं नारायण इति आख्या प्रतिसिद्धिर्यस्य तं शब्दं माता पिता भ्राता नि
वासः शरणं सुहृद्गतिर्नारायण शब्दार्थानुसंधाने भगवान् एव निरुपाधिकवंधुः अन्ये सोपाधिकवंधव इ
ति प्रतीत्या देहानुवंधि वांधवाभासेषु लौल्यं निवर्तत इति भावः विषय चपलधीः विषयेषु शब्दस्प
र्शादिषु चपला साभिलाषा धीर्बुद्धिर्यस्य स तथोक्तश्चेत् चतुर्थी नारायणपदोपरि स्थितां तृणानुभव
जनित प्रतिकारितां शेषावस्थोचितां शेष शेषत्वैकरति रूप नित्य निरवद्य निरतिशय भोग्य भगवत्कैं
कर्य प्रार्थना प्रकाशिकां संवेदन मान्वितां व्यक्तं चतुर्थीं साधु विधास्य तथा च तदर्थानुसंधाने तदु
क्तकैंकर्य भगवत एव न ममेति प्रीत्या तदितर सुखलव जनक परिणाति विसरेदुः [illegible] वहुलयंच
लहेय सकल विषय विमुखो भवतीति भावः ४ नयतीति नेत्री णीञ् प्रापण इति धातुः नेत्रा भावो
नेतृत्वं पुरुषकारत्वं नित्यश्चासौ योगश्च तं नित्ययोगं नित्य संश्लेषं समुचित तृणं जातं सम्यग्विचिता:

४

तम

चतुर्थीकं अकारं साधुविधान् तथाच अकारार्थानुसंधानेन सर्वप्रकारेणायभगवत एवशेषित्वं तस्यतच्छेष
त्वंइतिप्रतीत्यास्वात्मैकशेषत्वरूपस्वस्वातंत्र्यभ्रमोनिवर्ततइतिभावः इतरशेषत्वधीश्चेत् इतरेषांभगवद्भाग
वतव्यतिरिक्तानांशेषइतरशेषः तस्यभावस्तत्वं तस्मिन्धीर्यस्यतथोक्तश्चेत् द्वितीयप्रणवे द्वितीयंपदं अव
धारणार्थमकारान्वितमुकारंसाधुविधान् तथाचउकारार्थानुसंधानेजीवात्मपरमात्मनोश्शेषशेषि
भावसंबंधस्यानन्यार्हत्वप्रतीत्याइतरशेषत्वभ्रमोनिवर्ततइतिभावः आत्मनः स्वस्यत्राणं रक्षणंतस्मि
न्नुन्मुखः उद्युक्तः आत्मत्राणोन्मुखः साधनांतरानुष्ठानपरः स्याश्चेत्नमइतिपदं अनन्यशरणत्वप्रतिपाद
कं सखंडनमोन्विते अखंडनमःपदं साधुविधान् तथाचनमःशब्दार्थानुसंधानेनभगवानेवममरक्षको
नाहमितिप्रतीत्यासाधनांतरेभ्योनिवर्ततइतिभावः बांधवाभासलोलः बंधवएवबांधवाः तद्वदाभासं
तेप्रतीयंतेइतिबांधवाभासाः आपद्यरक्षकाः संपदिसर्वस्वापहारिणः शरीरसंबंधिनः तेषुलोलः

५ स्वासो भागश्च तं कर्तव्य भागं तु अधिकारिवेतनं कृत्वांशं च अथ अनंतरं मिथुनं परं प्रधानं यस्य तस्मि
न्मिथुनपरं लक्ष्मीनारायणात्मकं द्वंद्वरूपं एवं प्रसिद्धं मिथुनपरत्वेन प्रमाणसिद्धं शास्त्रयोग्यं प्राप्य
गम्यं स्वामित्वं शेषित्वं प्रार्थनां कैंकर्य्यं याच्ञां प्रबलतरविरोधिप्रहाणं अतिशयेन प्रबलो प्रबलत
रौ च तौ विरोधिनौ च तयोः प्रहाणं विनाशं अहंमोक्षकामो यं मोगरस्त्वेवंरूपाहंकारममकारनिवृत्तिमि
त्यर्थः एतान्पूर्वोक्तसंख्यकान् अर्थान् मंतारं अनुसंधातारं त्रायतैर्दांरंत्वेव इति षट्पदानि यस्य
स षट्पदः द्विखंडः द्वौ खंडौ अवयवौ यस्य स द्विखंडः द्विवाक्यः अयं द्वयाख्यो मंत्र अधिगतः प्राप्तः
निगमो वेदो यस्य स अधिगतनिगमः कठवल्ल्याद्युपनिषत्प्रसिद्ध इत्यर्थः ५ जगतां लोका
नां ईशानां नियंत्री अधिक ईशो नियंता अधीशस्तस्य वैभ्यर: तस्य दयितां वल्लभां अधीशदयि
तां अपायस्याभावो नपायः संश्लेषः नित्यं अनपायो यस्यास्तां नित्यानपायां नित्यसंश्लेषांघ्रि ५

10

समुचिताः समुचिताश्च ते गुणाश्च तेषां जातं समूहं आश्रयणसौकर्य्यापादकाश्रितकार्य्यापादक
वात्सल्यस्वामित्वसौशील्यसौलभ्यज्ञानशक्तिप्राप्तिपूर्तिगुणसमूहमित्यर्थः अत्र वात्सल्यं ना
म दोषभोग्यत्वं स्वामित्वं नाम स्वव्यतिरिक्तवस्तुषु स्वकीयत्वाभिमानः सौशील्यं नाम महतो मंदैः
सह नीरंध्रेण संश्लेषस्वभावत्वं सौलभ्यं नाम सकलमनुजनयनविषयत्वं ज्ञानं नाम हेजनस्याध
नेत्रित्वं नित्ययोगं समुचितगुणजातं तत्तु ख्यापनं चोपायं कर्तव्यभागं त्वथ मिथुनपरं प्राप्य
मेवप्रसिद्धम् स्वामित्वं प्रार्थनां च प्रबलतरविरोधिप्रहाणं दशैतान्मं तारं त्रायते चेत्यधि
गतनिगमः षट्पदोयं द्विखंडः ५ निखिलपरिज्ञानोपयोगि सार्वकालिकवस्तुविषयिकापरोक्षज्ञा
नं शक्तिर्नाम अघटितघटनासामर्थ्यं पूर्तिरवाप्तसमस्तकामात्वं प्राप्तिर्निरुपाधिक शेषित्व
रूपः संबंधः तत्तु ख्यापनं तनोर्दिव्यमंगलविग्रहस्य ख्यापनं प्रकाशनं च उपायं प्रापकं कर्तव्य

६

पं श्रिञ्सेवायां श्रुञ्श्रवणे शॄ हिंसायां स्तॄ विस्तारे एतेभ्यो धातुभ्यो ड्यन्तोऽयं श्रीशब्दः तत्र श्रि
ञ् सेवायामिति धातोः चेतनैः श्रियते सेव्यत इति श्रीरिति कर्मणि व्युत्पत्त्या आश्रयमाणचेतनेनात्म
त्वमुक्तं भगवन्तं आश्रयत इति श्रीरिति कर्तरि व्युत्पत्त्या आश्रयमाणे भगवति सौलभ्यत्वमुक्तं श्रुञ्श्र
वणे इति धातोः आश्रितविज्ञापनं शृणोतीति श्रीरिति कर्तरि व्युत्पत्त्या आभिमुख्यरहितानाम

ईशानां जगतामधीशदयितां नित्यानपायां श्रियं संश्रित्याश्रयणोचिताखिलगुणस्याङ्घ्री
हरेराश्रये इष्टोपायतया श्रिया च सहितायात्मेश्वरायार्थये कर्तुं दास्यमशेषमप्रतिहतं नि
त्यं त्वहं निर्ममः ६ श्रवधाने नाश्रितविज्ञापनश्रवणमुक्तं विमुखानपि हितं श्रावयतीति श्रीरि
ति कर्तरि व्युत्पत्त्या आभिमुख्यरहितानामपि हितोपदेष्टृत्वमुक्तं शॄ हिंसायामिति धातोः स्वाश्रित
दोषान् शृणाति हिनस्तीति श्रीरिति कर्तरि व्युत्पत्त्या आश्रितजनदोषनिवर्तकत्वमुक्तम् ८

६

श्री

१ प्रतिपादितं अखिलं समस्तं धर्मं मोक्षफलसाधनभूतं कर्मज्ञानांगभक्तियोगरूपं धर्मं संत्यज्य सर्वासनं त्यक्त्वा
पुनर्मामेकं स्थानप्रतिपादितप्रमाणेन अश्रमेकशब्देनावधारणार्थः आँयणमोक्षप्रापकं वात्सल्यादि
गुणाद्यनुषयशालिनं मामेवोद्दिश्य आर्तेः साधनानां स्वरूपविरुद्धत्वदुष्करत्वादिनात्यंतमवसन्नस्त्वं

मत्प्राप्त्यर्थं तथा मयोक्तमखिलं संत्यज्य धर्मं पुनर्मामेकं मद्वाप्तये शरणमित्यात्तौ व्यवसायं कुरु त्वा
मेवं व्यवसाययुक्तमखिलज्ञानादिपूर्णोऽहं मत्प्राप्तिप्रतिबंधकैर्विरहितं कुर्यामेवं मा शुच्याः १

ममग्रवाप्तिः मद्वाप्तिलक्ष्ये मद्वाप्तये मत्प्राप्तये शरणमिति अहमेवोपाय इति अवसायं कुरु एव
मनेन प्रकारेण व्यवसाययुक्तं अध्यवसायविशिष्टं अशक्तं अप्राप्तं भगवंतं अखिलैः समस्तैर्ज्ञानादिभिः
पूर्णः समग्रः अखिलज्ञानादिपूर्णः अहं मामाश्रितकार्योपादकज्ञानादिगुणचतुष्टयविशिष्टोऽहं म

१

स्तृ विस्तारे इति धातोर्गुणैराश्रितान् स्तृणाति विस्तारयतीति श्रीरिति निरुक्त्या आश्रितगणवर्द्धकत्वमुक्तं
एतादृशीं श्रियं भगवत्प्रधानमहिषीं संश्रित्य संप्रपद्य आश्रितस्य आश्रयणस्योचिता अनुगुणा अखिला समस्ता
गुणा वात्सल्यादयो यस्य तस्य आश्रयणोचिताखिलगुणस्य हरेर्भगवतः अंह्री चरणौ उक्तस्य अभीष्टस्य फल
स्य उपायः साधनमिष्टोपायस्तस्य भावस्तत्ता तया इष्टोपायतया आश्रये अध्यवस्यामि निश्चि यालक्ष्मा च स(
हिताय नित्यसंश्लिष्टाय आत्मनां ईश्वराय स्वे आत्मे स्वराय सर्वशेषिणे नारायणाय अहं तु शेषोपा
यस्वीकारेण संसारविलक्षणोऽहं निर्ममः अहंकारममकाररहितः सन् न विद्यते शेषो यस्मिन् न दशे
षं सकलविधं अप्रतिहतं निर्विघ्नं सर्वदेश सर्वकाल सर्वावस्थोचितं दास्यं कैंकर्यं कर्तुं आचरितुं
अर्थये प्रार्थये इ ममप्राप्तिर्मे स्वाप्ति रा[illegible] थैः प्रयोजनं यस्य स मत्स्वाप्त्यर्थः तस्य भावस्तत्ता तया म
त्स्वाप्त्यर्थतया मत्स्वाप्तिसाधनत्वेन मया हितोपदेशप्रवर्तनेन मयोक्तं सर्व न्यासं सपरिकरार्थं पूर्वं वहुलं

स्याप्तिप्रतिबंधकैः मद्वाप्तिविरोधिभिः अविद्याकर्मवासनारुचिप्रकृतिसंबंधैस्तदवांतरभेदैः पूर्वोक्तपापैर्विरहि
तं विमुक्तं करिष्यामि शुचं शोकं मा कृथाः मा कार्षीः स्वरूपविरुद्धोपायसाध्योपायांगत्यागवचनात्स्वरूपा
नुरूपनिरपायसिद्धोपायस्वीकारवचनाच्छोको न कर्त्तव्य इति भावः ७ हे हरे आश्रितदुरितनिवर्त्तक मयि सदा संततं

निश्चित्य त्वदधीनतां मयि सदा कर्माद्युपायान्हरे कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि दुःखाकुलः एतज्ज्ञा
नमुपेयुषो मम पुनः सर्वापराधक्षयं कर्तासीति दृढोस्मि ते तु चरमं वाक्यं स्मरन्सारथेः ८ रम रम रम

सार्वकालिकमित्यर्थः त्वदधीनतां त्वयि अधीनस्त्वदधीनस्तस्य भावस्तत्ता तां त्वदधीनतां त्वदायत्तस्वरूपस्थि
तिप्रवृत्तिकर्मत्वदेकपारतंत्र्यमिति यावत् निश्चित्य निर्णीय कर्माद्युपायान् कर्म आदिर्येषां ते कर्मादयस्ते च
ते उपायाश्च कर्माद्युपायान् कर्मयोगज्ञानयोगभक्तियोगानित्यर्थः कर्तुमनलं स्वरूपविरुद्धत्वाद्दुष्करत्वाद्दुः
खबहुलत्वात्सापायत्वात्स्वतो दुःसाधनत्वात्सापेक्षत्वाद्विलंबफलप्रदत्वाच्चिरकालसाध्यत्वादनेकत्वाच्च

तुष्ठानुमसमर्थः त्यक्तुमनलं वर्णाश्रमोचितत्वेन अभिमतफलसाधनत्वेन च शास्त्रचोदितत्वाच्च योपदिष्टत्वा
च्चप्रत्यवायभीत्याहातुमसमर्थः प्रपत्तुमप्यनलं स्वरूपानुरूपत्वसुखरूपत्वनिरपायत्वसिद्धत्वस्वतःफलसा
धनत्वनिरपेक्षत्वाविलंबफलप्रदत्वैश्वर्यादिभिस्सुकरोपायेष्वोकनिष्ठत्वमभिहितेपि तदनंतरं सर्वधर्मा
न्परित्यज्याशक्यत्वादात्मभावात्महाविश्वासाभावाच्च सर्वधर्मत्यागांगं प्रपदनं कर्तुमप्यसमर्थः अहं दुःखाकुल
शोकाविष्टः सन् सीदामि कृशीभवामि सारथ्यवीक्षल्यातिरेकार्जुनसारथिभूतस्य ते परमो मत्येतद्वचरममंति
मेवाकर्ण्यवाक्यार्थं सर्वधर्मानित्यादिचरमश्लोकार्थं स्मारन् अनुसंदधानः सन् पुनरेनमस्पूर्वोक्तं ज्ञानं पूर्वचोक्त
भगवदेकोपायत्वाध्यवसायं उपेयुषः त्वत्प्रसादात्प्राप्तवतः ममास्तस्याशक्तस्याप्राप्तस्य मे सर्वापत्तद्धन्तयं स
र्वेषाम पराधानां अविद्याकर्मवासनारुचिप्रकृतिसंबंधानां तद्वांतरभेदानां अहंकारममकारादीनां प्राप्ति
विरोधिनां सर्वं अश्लेषविनाशरूपसवासननिवृत्तिं कर्त्तास्मि कीर्तिस्तिरतिदृढोस्मि अध्यवसाददनिवृत्या
त्रिभृतभवामीत्यर्थः अस्मीति वर्त्तमाननिर्देशेन अध्यवसायस्य बोधत्याभावः सूचितः स्मरन्नित्यत्र व
र्त्तमाननिर्देशेन तदर्थानुसंधाने नैव कालक्षेपः कर्तव्य इति सूचितः ८ इत्थं बालप्रबोधार्थमष्टश्लोक्यापमा